# मुण्डमाला तन्त्रोक्त महाविद्या स्तोत्रम्

ॐ नमस्ते चण्डिके चण्डि चण्डमुण्डविनाशिनी ।
नमस्ते कालिके कालमहाभयविनाशिनी ॥ 1 ॥

शिवे रक्ष जगद्धात्री प्रसीद हरवल्लभे ।
प्रणमामि जगद्धात्रीं जगत्पालनकारिणीम् ॥ 2 ॥

जगत् क्षोभकरीं विद्यां जगत्सृष्टि विधायिनीम् ।
करालां विकटां घोरां मुण्डमाला विभूषिताम् ॥ 3 ॥

हरार्चितां हराराध्यां नमामि हरवल्लभाम् ।
गौरीं गुरुप्रियां गौरवर्णां अलङ्कारभूषिताम् ॥ 4 ॥

हरिप्रियां महामायां नमामि ब्रह्मपूजिताम् ।
सिद्धां सिद्धेश्वरीं सिद्धविद्याधरगणैः युताम् ॥ 5 ॥

मन्त्रसिद्धिप्रदां योनिसिद्धिदां लिङ्गशोभिताम् ।
प्रणमामि महामायां दुर्गां दुर्गतिनाशिनीम् ॥ 6 ॥

उग्रां उग्रमयीं उग्रतारां उग्रगणैः युताम् ।
नीलां नीलघनश्यामां नमामि नीलसुन्दराम् ॥ 7 ॥

श्यामाङ्गीं श्यामघटितां श्यामवर्णविभूषिताम् ।
प्रणमामि जगद्धात्रीं गौरीं सर्वार्थसाधिनीम् ॥ 8 ॥

विश्वेश्वरीं महाघोरां विकटां घोरनादिनीम् ।
आद्यां आद्यगुरोः आद्यामाद्यनाथ प्रपूजिताम् ॥ 9 ॥

श्री दुर्गां धनदां अन्नपूर्णां पद्मां सुरेश्वरीम् ।
प्रणमामि जगद्धात्रीं चन्द्रशेखरवल्लभाम् ॥ 10 ॥

त्रिपुरां सुन्दरीं बालां अबलागणभूषिताम् ।
शिवदूतीं शिवाराध्यां शिवध्येयां सनातनीम् ॥ 11 ॥

सुन्दरीं तारिणीं सर्वशिवागणविभूषिताम् ।
नारायणीं विष्णुपूज्यां ब्रह्मविष्णुहरप्रियाम् ॥ 12 ॥

सर्वसिद्धिप्रदां नित्यां अनित्यां गुणवर्जिताम् ।
सगुणां निर्गुणां ध्येयां अर्चितां सर्वसिद्धिदाम् ॥ 13 ॥

विद्यां सिद्धिप्रदां विद्यां महाविद्यां महेश्वरीम् ।
महेशभक्तां माहेशीं महाकालप्रपूजिताम् ॥ 14 ॥

प्रणमामि जगद्धात्रीं शुंभासुरविमर्दिनीम् ।
रक्तप्रियां रक्तवर्णां रक्तबीजविमर्दिनीम् ॥ 15 ॥

भैरवीं भुवनां देवीं लोलजिह्वां सुरेश्वरीम् ।
चतुर्भुजां दशभुजां अष्टादशभुजां शुभाम् ॥ 16 ॥

त्रिपुरेशीं विश्वनाथप्रियां विश्वेश्वरीं शिवाम् ।
अट्टहासां अट्टहासप्रियां धूम्रविनाशिनीम् ॥ 17 ॥

कमलां छिन्नभालाञ्च मातङ्गीं सुरसुन्दरीम् ।
षोडशीं विजयां भीमां धूमाञ्च वगलामुखीम् ॥ 18 ॥

सर्वसिद्धिप्रदां सर्वविद्यामन्त्रविशोधिनीम् ।
प्रणमामि जगत्तारां साराञ्च मन्त्रसिद्धये ॥ 19 ॥

इत्येवञ्च वरारोहे स्तोत्रं सिद्धिकरं परम् ।
पठित्वा मोक्षं आप्नोति सत्यं वै गिरिनन्दिनि ॥ 20 ॥

॥ इति मुण्डमाला तन्त्रोक्त महाविद्या स्तोत्रं संपूर्णम् ॥